राजा। भवति हि।

आनन्दकन्दलितमस्य वपुर्यदाऽयं
भावं स्पृशत्यथ तमेव बहिर्व्यनक्ति।
यैः पूर्य्यते स्फटिकजा घटिका रसैस्तै-
स्तद्वर्णभाग्भवति ! तानुपदर्शयन्ती ॥ (ख)

पुनर्नेपथ्ये गानध्वनिः।

राजा। आकर्ण्य। किमेतद्गीतम्।

काशी। भगवद्वंशी-नाद-माधुरी-प्रतिपादकमिदं गौड़ीयभाषोपनिबद्धमिति देवेन नाकलय्यते। (ग)

राजा। अहो ! चित्रं यदेषः।

गौरः कृष्ण इति स्वयं प्रतिफलन् पुण्यात्मनां मानसे
नीलाद्रौ नटतीह सम्प्रथयते वृन्दावनीयं रसम्।
आद्यः कोऽपि पुमान् नवोत्सुकवधूकृष्णानुरागव्यथा-
स्वादी चित्रमहो ! विचित्रमहहो ! चैतन्यलीलायितम् ॥ (घ

---

(ख) आनन्देति। अस्य देवस्य वपुः शरीरम् आनन्दकलितम् आनन्दपूर्णम्। अयं प्रभुः यदा भावं वस्तुविशेषस्येति भावः स्पृशति अभिनिविशतीत्यर्थः। अथ तद्भावस्पर्शानन्तरमित्यर्थः तमेव भावं बहिः व्यनक्ति प्रकटयति। तथाहि स्फटिकजा घटिका पात्रविशेषः यैः रसैः पूर्य्यते, तैः रसैः तद्वर्णभाक् तद्वर्णग्राहिणी सती तान् रसान् उपदर्शयन्ती प्रकटयन्तीत्यर्थः भवति। वसन्ततिलकं वृत्तम्।

(ग) भगवद्दिति। भगवतः देवस्य यः वंशीनादः तस्य माधुरी माधुर्य्यं तस्याः प्रतिपादकं बोधकम्। गौड़ीयभाषया बङ्गभाषया इत्यर्थः उपनिबद्धं विरचितम्। आकलय्यते बुध्यते।

(घ) गौर इति। एष गौरः कृष्ण इति पुण्यात्मनां पुण्यवतां

KANDIKÂ 9.

क्ताः। अथ देशकालकृ
यो दर्शः प्रवर्तते।
चैत्राद्या द्वादश स्मृताः
सा सा चैत्रादिका स्मृ
क्षत्रस्येति निर्णयः ।।
र्या तदन्ते चान्द्रमासे
स्तु भवतु मा वा। त
विधिनोपाकर्म कृत्वा
रात्रिभागे नाधीयीत
णाद्रात्राववप्यूर्ध्वं न दो
र्णमासी तैषी श्रावणी
गृह्य एवोक्तः। रोहि
विरमेत्। अनयोः प

अर्धाधिकांश्चतुरो मा
ष्ठपद्यामुपाकरणम्।
न कृते श्रावण्याः प्रा
णाद्यङ्गाध्ययनम्। पु
प्रपञ्चितमेतद्गृह्ये ।।
नियमेन गम्यत ए

ण्य निगमेष्यधीयीत
दर्वागिति गम्यते। ग्रा

ध्यवसितं स्वीकृतं

ज्ञायतेयं स प्रदेश
।।

नामज्ञापनम् G.U

पुनर्निरूप्य। अये ! चिरकालमेकस्यैव गीतपदस्य ध्रुव-मेव गीयते। (ङ)

काशी। प्रथमतो यस्यां लीलायां मनः प्रविवेश न ततः पुनरावर्त्तते। (च)

राजा। भवत्येवमेव। इति पुनरालोक्य सहर्षम्। अहो ! कीदृशमस्य माधुर्यं पश्य पश्य।

जानूत्क्षेपभुजावधूननपदन्यासाक्षिविक्षेपणै-
र्हृत्तानन्दयतो मनांसि सुहृदां विश्वं जडीकुर्वतः।
निष्ठेवैर्मुखमस्य भाति सुभगस्मेरं महानन्दतः
फेनैर्हंससरोरुहं हतमिव स्थानैरिवेन्दुर्हिमैः॥ (छ)

---

मानसे स्वयं प्रतिफलन् प्रकाशमानः इह कश्चित् लीलाहरि नटति नृत्यति, वृन्दावनीयं वृन्दावनसम्बद्धं रसं भावं सञ्चययते सम्यक् प्रका-शयति। अहो ! चित्रम् अहहो ! विस्मितम् अतिविस्मयकरमित्यर्थः चैतन्यलीलायितं श्रीगौराङ्गविलासः, आद्यः कोऽपि पुमान् नवाया नवीनायाः उत्सुकायाः वध्वाः राधायाः इति भावः कृष्णे यः अनु-रागः तस्य व्यथास्वादी तद्विरहास्वादवानित्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(ङ) चिरकालं दीर्घकालमित्यर्थः। ध्रुवं सङ्गीतस्य वीजीभूता-वयवविशेषः।

(च) ततः तस्या लीलाया इत्यर्थः। आवर्त्तते निवर्त्तते।

(छ) जान्विति। जानुनोरुत्क्षेपेण ऊर्द्ध्वक्षेपेण भुजयोर्बाह्वोः अवधूननेन सञ्चालनेन पदयोर्न्यासेन निक्षेपेण अक्षिविक्षेपेण नयन-सञ्चारणैश्च हृत्तोति विशये, सुहृदां मनांसि आनन्दयतः आनन्दितानि कुर्वतः तथा विश्वं जगत् जडीकुर्वतः निस्पन्दीकुर्वतः अस्य देवस्य महानन्दतः महतः आनन्दात् सुभगस्मेरं सुप्रसन्नस्मितं मुखं निष्ठेवैः

पुनरालोक्य सविस्मयम् । अये ! ।

क एष निःसाध्वसमास्यमण्डला-
न्निष्ठेवमाकण्य पिबन् प्रमोदते ।
चन्द्राद्वहिर्भूतमिवास्तद्रव-
स्त्वोल्लासिनं फेणमहो चकोरकः ॥ (ज)

काशी । शुभानन्दनामाऽयं वैष्णवः ।

राजा । अहो ! एकमेव गीतध्रुवपदम् । एक एव तारस्वरः । एक एवोल्लासो गायकानां यामद्वयं यावत् । भगवतोऽपि समान एवानन्दप्रकाशचमत्कारः । तदमीभी रसान्तरेण विरहावेशतरङ्गो दूरीकृतः । प्रकृतरसान्तरं के नान्तरयन्तु उभयथैव भगवत आङ्किकविगनः । (झ)

---

निःसृतमुखास्रुतबिन्दुभिरित्यर्थः केनैवृतं हेमसरोरुहमिव स्वर्णपद्ममिव [illegible]ः शार्ङ्गं मतैः [illegible] इतः इन्दुचन्द्र इव भाति विराजते । शार्दूलविक्रीडितं वृत्तम् ।

(ज) क इति । अहो ! आश्चर्यं चन्द्रात् बहिर्भूतं निःसृतमित्यर्थः स्वोल्लासिनं स्वमात्मानम् उल्लासयतीति तथोक्तं फेनं फेननिभमित्यर्थः अस्तद्रवं चकोरक इव क एषः आस्यमण्डलात् मुखमण्डलात् प्रभोरिति शेषः निःसाध्वसं निर्भयं तथा तथा निष्ठेवम् आकण्य पिबन् सन् प्रमोदते प्रकर्षेण हृष्यति उल्लसतीत्यर्थः । वंशस्थविलं वृत्तम् ।

(झ) तारस्वरः महान् स्वरः । यामद्वयं प्रहरद्वयम् । अमीभिः पार्षदैः रसान्तरेण अन्येन रसेन । विरहावेशतरङ्गः विच्छेदवैकल्यपरम्परा । प्रकृतरसान्तरम् अवश्यकर्त्तव्यव्यापारमित्यर्थः केन कथम् अन्तरयन्तु अतिक्रामन्तु वृता इति शेषः । नैवावश्यकार्यं नातिक्रमितव्यमिति भावः । उभयथैव विरहवैकल्ये तदपनयनव्यापारे चेत्यर्थः ।



---

KANDIKÂ 9.

क्ताः। अथ देशकालकृ
यो दर्शः प्रवर्तते ।
चैत्राद्या द्वादश स्मृताः
सा सा चैत्रादिका स्मृ
क्षत्रस्येति निर्णयः ॥
या तदन्ते चान्द्रमासे
स्तु भवतु मा वा । त
विधिनोपाकर्म कृत्वा
रात्रिभागे नाधीयीत
गाद्रात्रावप्यूर्ध्वं न दो
र्णमासी तैषी श्रावणी
गृह्य एवोक्तः । शेषि
विरमेत् । अनयोः प
अर्धाधिकांश्चतुरो मा
पौष्ठपद्यामुपाकरणम् ।
व कृते श्रावण्याः प्रा
णाद्यङ्गाध्ययनम् । पु
प्रपञ्चितमेतद्गृह्ये ॥
नियमेन गम्यत ए
ण्य निगमेष्वधीयीत
दर्वागिति गम्यते । श
ाध्यवसितं स्वीकृतं
ज्ञायतेयं स प्रदेश
॥

नामज्ञापनम् G.U. ¹)

काशी । तथाऽपि (ञ) विरहावेगो भक्तानां दुःसहः ।
इति पुनर्निभाल्य । देव ! निर्व्यूढोऽयं नृत्योत्सवः । यदमी भगवन्तं धृत्वा स्वाऽऽवासं प्रति गच्छन्ति ।

राजा । भद्रं सम्भाव्यते कदाचिदाह्निकमपि तदधुना मिश्र ! भगवत्समीपं गम्यतामहमिहैव क्षणं निद्रामि ।

काशी । यथाऽऽज्ञापयसि । इति निष्क्रान्तः ।

राजा । गतो मिश्रस्तदिह निद्रामि । इति निद्रां नाटयित्वा पुनरुत्थाय । अहो ! विभातेयं विभावरी । यतः

अस्ताचलोदयमहीधरयोस्तटान्तं
शीतांशुचण्डकिरणावुपसेदिवांसौ ।
तुल्यत्विषौ मृदुतया वहतः प्रगस्य
वर्षीयसः श्रवणमिवोपरि लोचनत्वम् ॥ (ट)

इति परितो विलोकयति ।

नेपथ्ये । अहो ! महत्कौतुकम् ।

---

आह्निकस्य दैनिककरणीयस्य सन्ध्यावन्दनादेरिति भावः विगमः व्यतिक्रमः ।

(ञ) तथापि आह्निकविगमेऽपीत्यर्थः ।

(ट) अस्तेति । शीतांशुचण्डकिरणौ चन्द्रसूर्यौ अस्ताचलोदयमहीधरयोः अस्तोदयपर्वतयोः तटान्तं चूडाप्रदेशम् उपसेदिवांसौ गतौ अस्तं गच्छन् चन्द्रः उदयन् सूर्यश्चेत्यर्थः मृदुता मार्दवेण तदालोकमिति शेषः तुल्या त्विट् कान्तिर्ययोस्तादृशौ समप्रभाविशिष्टौ सन्तौ वर्षीयसः स्थविरस्य प्रगस्य प्रातःकालस्य उपरि श्रवणं लोचनत्वमिव वहतः प्राप्नुतः । प्रगस्य वर्षीयस्त्वं चिरकालव्यापिस्थितेरिति बोध्यम् । वसन्ततिलकं वृत्तम् ।

प्रातः प्रत्यहमर्घ्यगन्धतुलसीपुष्पादिभिः पूजय-
त्यद्वैते भगवन्तमन्तरसुखावेशोल्लसद्रोमणि ।
स्मित्वा तैर्हठतो हृतैरतिरसेनाद्वैतमभ्यर्चय-
न्देवो घुर्घुरितैर्मुखेऽङ्गुलिदलैरुद्वाद्यवाद्यं व्यधात् ॥ (ठ)

अपि च, यस्य न्यस्य कराब्जकोषकुहरे पूजोपचारं प्रभोः
पूजां कर्त्तुमनाः प्रयाति कुतुकादद्वैतदेवोऽन्वहम् ।
श्रीनाथः स तदा प्रभोर्गुणनिधेः सन्दर्शनस्पर्शन-
प्रेमालापकृपाकटाक्षकलया पूर्णान्तरोऽजायत ॥ (ड)

राजा । अये ! कथमयं तुलसीमिश्रः परीक्षामहापात्रं किमपि प्रस्तौति तत् श्रोतव्यं यत् सत्वरमित एवाभिगच्छति ।

प्रविश्य

तुलसी । देव ! जगन्नाथस्य रथयात्रा नेदीयसीति

---

(ठ) प्रातरिति । प्रत्यहं प्रातः अद्वैते अर्घ्यगन्धतुलसीपुष्पादिभिः भगवन्तं देवं पूजयति अतएव अन्तरसुखावेशेन आन्तरानन्दातिरेकेण उल्लसद्रोमणि रोमाञ्चितकलेवरे सति देवः श्रीचैतन्यः स्मित्वा हठतः सहसा हृतैः आकृष्टैः तैः अर्घ्यादिभिः अतिरसेन अनुरागातिशयेन अभ्यर्चयन् मुखे घुर्घुरितैः घुर्घुरशब्दं कुर्वद्भिरित्यर्थः अङ्गुलिदलैः उद्वाद्यम् उच्चैर्वादनीयं वाद्यं व्यधात् कृतवान् । शार्दूलविक्रीडितं वृत्तम् ।

(ड) यस्येति । अद्वैतदेवः अन्वहं प्रत्यहं यस्य कराब्जकोषकुहरे करकमलकुड्मलान्तरे पूजोपचारं पूजोपकरणं न्यस्य अर्पयित्वा कुतुकात् कौतुक्यात् पूजां कर्त्तुं मनो यस्य तथाभूतः सन् प्रयाति गच्छति, स श्रीनाथः तदा गुणनिधेः प्रभोः श्रीचैतन्यस्य सन्दर्शनेन स्पर्शनेन प्रेमालापेन कृपाकटाक्षकलया कृपावलोकनविधानेन च पूर्णम् अन्तरं यस्य तथाविधः अजायत अभूत् । शार्दूलविक्रीडितं वृत्तम् ।



काः। अथ देशकालकृ
यो दर्शः प्रवर्तते ।
त्राद्या द्वादश स्मृताः
सा सा चैत्रादिका स्मृ
क्षत्रस्येति निर्णयः ॥
या तदन्ते चान्द्रमासे
स्तु भवतु मा वा । त
विधिनोपाकर्म कृत्वा
रात्रिभागे नाधीयीत
गाद्रात्रावप्यूर्ध्वं न दो
मासी तैषी श्रावणी
गृह्य एवोक्तः । रोहि
विरमेत् । अनयोः प

अर्धाधिकांश्चतुरो मा
पौष्ठपद्यामुपाकरणम् ।
व कृते श्रावण्याः प्रा
णाद्यङ्गाध्ययनम् । पु
प्रपञ्चितमेतद्गृह्ये ॥
नियमेन गम्यत ए

ण्य निगमेप्यधीयीत
दर्वागिति गम्यते । श

ाध्यवसितं स्वीकृतं

ज्ञायतेयं स प्रदेश

ापनम् G.U. )

गुण्डिचामन्दिरमार्ज्जनक्षालनार्थं स्वयमेव महाप्रभुस्तत्रो-द्यतः । (ठ)

राजा । प्रियं मे प्रियं किञ्चिदागतमस्ति ।

तुलसी । यदागतं तत् काशीमिश्रेणैव सम्पादितम् ।

राजा । किं तत् ।

तुलसी । यावन्तस्तल्लोकास्तावत्य एव सम्मार्ज्जन्यो घटास्तु (ण) ततोऽधिकाः ।

राजा । एतावन्मात्रम् ।

तुल । किमन्येन तत्प्रयोजनम् ।

नेपथ्ये कलकलः ।

तुलसी । देव ! पश्य पश्य ।

श्रीहस्तेन विलिप्य चन्दनरसैः प्रत्येकमेषां वपु-
र्निक्षिप्याप्यधिकाम्बरं भगवतो निर्माल्यमाल्यानि च ।
उल्लासद्रुममञ्जरीरिव करे सङ्ग्राहयन् शोधिनी-
र्मत्तश्च मतङ्गजालसगतिर्गौरो विनिष्क्रामति ॥ (त)

---

(ठ) महाप्रभुः श्रीचैतन्यः । तत्र तत्तत् कर्मणि ।

(ण) घटाः जलकलशाः ।

(त) श्रीहस्तेनेति । गौरः श्रीचैतन्यः श्रीहस्तेन प्रत्येकम् एषां सुभद्रा बलरामजगन्नाथानां वपुः शरीरं चन्दनरसैः विलिप्य अधिकाम्बरं श्रीवासो भगवतः निर्माल्यमाल्यानि निक्षिप्य च करम् उल्लासा एव द्रुमाः तरवः तेषां मञ्जर्यः ता इव शोधनीः सम्मार्ज्जनीः संग्राहयन् करेण स्वहस्तेनोर्द्धः मत्तः मतङ्गजः हस्ती तद्वत् अलसा गतिर्यस्य तथाभूतः सन् विनिष्क्रामति निर्गच्छति देवकुलादिति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

अपिच। निर्गच्छन्ति मुदा मनोरथरथैः सन्तोषदन्तावलै-
रत्युल्लासतुरङ्गमैर्भवजये जैत्रा इवामी भटाः।
रोमाञ्चावलिकञ्चुकाच्छवपुषोऽश्रान्तस्रवैर्बिभ्रतो
वाष्पैर्वारणमस्त्रमेव समदं हुङ्कारझङ्कारिणः॥ (थ)

राजा। धिग् भूपत्वं कदाऽहमेषां मध्ये यः कश्चिदेव भवन् भगवन्तमनुव्रजामि। तुलसीमिश्र! कथमिदं कौतुकमामूलमाकर्ण्यते। (द)

तुल। अस्ति कश्चिन्मदीयः पुरुषः स एव सर्वं समाकलय्यागतप्रायः। (ध)

राजा। प्रियं मे प्रियम्। प्रविश्य सत्वरः कश्चित् राजानं प्रणम्य।

महाराज! सर्वमवलोक्यागतम्। (न)

---

(थ) निर्गच्छन्तीति। भवस्य संसारस्य जये विषये जैत्रा जयशीला भटा योद्धार इव अमी पार्षदाः रोमाञ्चावलयः कञ्चुका गात्रावरणानीव तैः आच्छम् आवृतं वपुः येषां तथोक्ताः, अश्रान्तस्रवैः अविरतं निःसरद्भिः वाष्पैः आनन्दाम्बुभिः वारणं वरणदेवताकमेव अस्त्रं बिभ्रतः धारयन्तः तथा समदं सानन्द हुङ्कारझङ्कारिणः हुङ्काररवं कुर्वन्त इत्यर्थः सन्तः मुदा आनन्देन मनोरथा रथा इव तैः सन्तोषा दन्तावला हस्तिन इव तैः, तथा अत्युल्लासाः तुरङ्गमाः अश्वा तैः निर्गच्छन्ति उपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

(द) भूपत्वं राजत्वं धिक् निन्दामीत्यर्थः धिक्निर्भर्त्सननिन्दयोरित्यमरः। आकर्ण्यते श्रूयते।

(ध) समाकलय्य विदित्वा।

(न) आगतं अस्तीति शेषः।

KANḌIKÂ 9.

क्ताः। अथ देशकालकृ
यो दर्शः प्रवर्तते।
चैत्राद्या द्वादश स्मृताः
सा सा चैत्रादिका स्मृ
क्षत्रस्येति निर्णयः॥
न्या तदन्ते चान्द्रमासे
स्तु भवतु मा वा।
वधिनोपाकर्म कृत्वा
रात्रिभागे नाधीयीत
गाद्रात्रावप्यूर्ध्वं न दो
र्णमासी तैषी श्रावण
गृह्य एवोक्तः। रोहि
विरमेत्। अनयोः प

अर्धाधिकांश्चतुरो मा
ौष्ठपद्यामुपाकरणम्।
व कृते श्रावण्याः प्रा
गाद्यङ्गाध्ययनम्। पु
प्रपञ्चितमेतद्गृह्ये॥
नियमेन गम्यत एी

प्य निगमेप्यधीयीत
दर्वागिति गम्यते। ३

ाध्यवसितं स्वीकृतं

ज्ञायतेयं स प्रदेश
॥

नामज्ञापनम् G.U.)

राजा । कथय ।

पुरुषः । देव ! अवधीयताम् ।

पाणौ कृत्वा मधुरमृदुले शोधनीमूर्द्ध्वमूर्द्ध्वं
सर्वैः सार्द्धं स्वयमयमसौ गुण्डिचामण्डपान्तः ।
लूतातन्तून् मलिनरजसः सारयन्नेव तैस्तै-
र्व्याप्तो गौरः शशधर इव व्यक्तलक्ष्मा बभूव ॥ (प)

अनन्तरम् ।

हस्ताप्राप्ये कमपि समुपारोप्य कस्यापि चांसे
मा भैषीरित्यहह ! निगदन् मेघगम्भीरयोक्त्या ।
अभ्युन्नेत्रः सरजसतनुर्मार्ज्जयित्वोर्द्ध्वमूर्द्ध्वं
भित्तीः सिंहासनमथतलं शोधयामास देवः ॥ (फ)

---

(प) पाणाविति । अयम् असौ गौरः स्वयं मधुरमृदुले मनोहरकोमले पाणौ शोधनीं मार्जनीं कृत्वा गुण्डिचामण्डपान्तः गुण्डिचाख्यगृहाभ्यन्तरे सर्वैः पार्षदैः सार्द्धम् ऊर्द्ध्वम् ऊर्द्ध्वं स्थितानिति शेषः मलिनानि रजांसि रेणवः येषु तथाविधान् लूतातन्तून् सारयन्नेव अपनयन्नेव तैः तैः सरजस्कलूतातन्तुभिः व्याप्तः समावृतः सन् व्यक्तं स्फुटं लक्ष्म कलङ्कः यस्य तादृशः शशधर इव चन्द्र इव बभूव । मन्दाक्रान्तावृत्तम् ।

(फ) हस्ताप्राप्ये इति । अथ देवः हस्ताप्राप्ये हस्तेन प्राप्तुमशक्ये देशे इति शेषः कस्यापि जनस्य अंशे स्कन्धे कमपि जनं समुपारोप्य मेघगम्भीरया उक्त्या वचनेन माभैषीः भयं मा कुरु इति तं निगदन् अहह आश्चर्यम् अभ्युन्नेत्रः उत्क्षिप्तलोचनः तथा सरजस्तनुः धूलिधूसराङ्गः सन् ऊर्द्ध्वम् ऊर्द्ध्वं मार्जयित्वा भित्तीः कुड्यानि सिंहासनं तलं कुट्टिमभागञ्च शोधयामास । मन्दाक्रान्तावृत्तम् ।

अपि च । बहिर्वासोऽञ्चल्यामवकरचयं शोधनिकया
समाहृत्यापूर्य स्वयमथ बहिः सारयति सः ।
क्वचिद्धस्तप्राप्यावधि सरभसं मार्ष्टि च कलं
सुहृद्वर्गैर्गायत्यपि स कुतुकं गापयति च ॥ (ब)

राजा । ततस्ततः ।

पुरु । एवं मूलमण्डप- जगन्मोहनभोग-मण्डपानां मार्ज्जनानन्तरम् ।

कूपात् केऽपि समुद्धरन्ति कतरः कस्यापि हस्ते ददौ
सोऽप्यन्यस्य करे स चापरकरे सोऽन्यः करे कस्यचित् ।
इत्थं शृङ्खलया घटानथ नयन् पूर्णानपूर्णांस्त्यजन्
पूर्णापूर्णपरिग्रहत्यजनयोः भिन्नां व्यतानीज्जनः ॥ (भ)

---

(ब) बहिरिति । अथ अनन्तरं स देवः स्वयं शोधनिकया मार्जन्या अवकरचयं निःसारणीयद्रव्यसमूहं समाहृत्य एकत्रीकृत्य बहिर्वाससः अञ्चल्यां प्रान्तदेशे आपूर्य बहिः सारयति निष्कासयतीत्यर्थः । क्वचित् सः देवः हस्तप्राप्यावधि हस्तप्राप्यं यावत् सरभसं सवेगं मार्ष्टि शोधयति गायति अपि, सुहृद्वर्गैः कलं मधुरं गापयति च । शिखरिणीवृत्तम् ।

(भ) कूपादिति । केऽपि जनाः कूपात् अम्भः जलं समुद्धरन्ति समुत्तोलयन्ति घटैरिति शेषः, कतरः कोऽपि कस्यापि हस्ते ददौ जलकुम्भमिति शेषः, सोऽपि अन्यस्य जनस्य करे स चान्यः अपरस्य करे, सः अपरः कस्यचित् करे, ददाविति सर्वत्र योज्यम् । इत्थं शृङ्खलया पूर्णान् घटान् नयन् अथ अपूर्णांश्च त्यजन् जनः पूर्णापूर्णयोः परिग्रहत्यजनयोः पूर्णपरिग्रहस्य अपूर्णत्यागस्य चेत्यर्थः भिन्नां व्यतानीत् विस्तारयामास पूर्णः परिग्राह्यः नापूर्ण इति भिन्नां दृष्टिमिति भावः मतीनामोत्प्रेक्षा । शार्दूलविक्रीडितं वृत्तम् ।

KANDIKÂ 9.

क्ताः। अथ देशकालक्र
यो दर्शः प्रवर्तते ।
चैत्राद्या द्वादश स्मृताः
सा सा चैत्रादिका स्मृ
क्षत्रस्येति निर्णयः ॥
न्या तदन्ते चान्द्रमासे
स्तु भवतु मा वा ।
वेधिनोपाकर्म कृत्वा
रात्रिभागे नाधीयीत
गाद्रात्रावप्यूर्ध्वं न दो
र्णमासी तैषी श्रावण
गृह्य एवोक्तः । रोहि
विरमेत् । अनयोः प

अर्धाधिकांश्चतुरो मा
प्रौष्ठपद्यामुपाकरणम् ।
व कृते श्रावण्याः प्रा
णाद्यङ्गाध्ययनम् । पु
प्रपञ्चितमेतद्गृह्ये ॥
नियमेन गम्यत ए

ष्य निगमेष्यधीयीत
दर्वागिति गम्यते । इ

ाध्यवसितं स्वीकृतं

ज्ञायतेयं स प्रदेश
॥

नामज्ञापनम् G.U. [1] )

अपि च। केचिद्गौरगिरा मनोज्ञमतयः सिञ्चन्ति सिंहासनं
भित्तीः केचन केऽपि तस्य करयोर्वार्य्यर्पणं कुर्वते।
केचित् तत्पदपङ्कजोपरि घटैः सिञ्चन्ति सन्तोषत-
स्तत्केऽप्यञ्जलिना पिबन्ति ददते केचिच्च मूर्द्धन्यपि॥ (म)

राजा। ततः।

पुरु। ततः पूर्ववत् क्रमेण प्रक्षाल्य धौतपादा एव सर्वे स्वस्ववासोभिस्तत्क्रमेण सलिलान्यपसारयाम्बभूवुः। तथा कृत्वा अङ्गणमुत्तीर्य्य तच्छोधनारम्भे। (य)

पङ्क्तीभूयोपविष्टे निजजननिकरे कौतुकान्मध्यवर्त्ती
चिन्वन्वासःप्रपूरं चिरसमुपचिताः शर्कराश्चत्वरस्य।
पश्यामः के कतीमा विदधति विचिता इत्यवोचद्यदेश-
स्तर्ह्येवामी प्रमोदादहमहमिकया चेतुमुद्योगमीयुः (र)

---

(म) केचिदिति। गौरस्य श्रीचैतन्यस्य गिरा वचनेन मनोज्ञा मतिर्येषां तादृशाः केचित् सिंहासनं सिञ्चन्ति, केचन भित्तीः कुड्यानि सिञ्चन्तीति शेषः। केऽपि तस्य देवस्य करयोः वार्य्यर्पणं जलप्रदानं कुर्वते। केचित् घटैः तस्य देवस्य पदपङ्कजोपरि पादपद्मोपरि सन्तोषतः आनन्देन सिञ्चन्ति। केऽपि तत् देवस्य पादपद्मस्पृष्टजलमित्यर्थः अञ्जलिना पिबन्ति, केचिच्च मूर्द्धन्यपि शिरस्यपि ददते अर्पयन्ति। शार्दूलविक्रीडितं वृत्तम्।

(य) तत्क्रमेण तस्य देवस्य क्रमेण नियमेन। अङ्गणं चत्वरम्। तच्छोधनान्ते तस्य अङ्गणस्य शोधनान्ते।

(र) पङ्क्तीभूयेति। निजजननिकरे स्वगणनिवहे पङ्क्तीभूय श्रेणीक्रमेणेत्यर्थः उपविष्टे सति मध्यवर्त्ती देवः देवः वासः प्रपूरं वसनचयं चिन्वन् संगृह्णन् कौतुकात् यदा चत्वरस्य अङ्गणस्य चिरसमुपचिताः बहुकालसञ्चिताः इमाः शर्कराः कर्कराः, के जनाः कति

एवं स्वचरितमिव निरवकरं (ल) स्वहृदयमिव स्निग्धञ्च सर्व्वतश्चत्वरतलं कृत्वा तेऽमी भगवत्कीर्त्तनमारेभिरे । तथा हि

क्षोभं क्षौणीमृगाक्ष्याः स्थगनमिह रवेः कम्पमाशावधूनां
स्तम्भं वातस्य कुर्व्वन्नमरपरिवृढस्यास्रमक्ष्णां सहस्रे ।
स्वेदं सप्तर्षिगोष्ठ्याः पररसमयोल्लासमौत्तानपादे-
र्ध्यानध्वंसं विरिञ्चेः स जयति भगवत्कीर्त्तनानन्दनादः ॥ (व)

ततश्च । नर्त्तित्वा क्षणमेव चारु मधुरं गौरो हरिर्नर्त्तया-
ञ्चक्रेऽद्वैततनूजमेकमधुरं गोपालदासाभिधम् ।
नृत्यन्नेव समूर्च्छितः सुखवशाद्देहान्तरं यन्निवा-
हैते खिद्यति पाणिपद्मवलनाद्देवः स तं प्राणयत् ॥ (श)

---

विचिताः संगृहीताः विदधति कर्त्तुं शक्नुवन्ति, पश्याम इति अवोचत् कथयामास, तर्हि एव तदैव अमी तदीया जनाः प्रमोदात् उल्लासात् अहमहमिकया अहमग्रे अहमग्रे विचिनोमीत्युक्तिक्रमेणेत्यर्थः चेतः शर्करा इति शेषः उद्योगं चेष्टाम् ईयुः प्रापुः चक्रुरित्यर्थः । स्रग्धरावृत्तम् ।

(ल) निरवकरं निर्दोषमिति भावः ।

(व) क्षोभमिति । इह अस्मिन् लोके स भगवत्कीर्त्तनानन्दनादः हरिसङ्कीर्त्तनध्वनिः क्षौणीमृगाक्ष्याः पृथिवीनायिकायाः क्षोभं, रवेः सूर्य्यस्य स्थगनं तिरोधानम् अमरपरिवृढस्य देवराजस्य अक्ष्णां नेत्राणां सहस्रे अस्रं बाष्पजलं सप्तर्षिगोष्ठ्याः सप्तर्षिमण्डलस्य स्वेदं घर्म्मम् औत्तानपादेः उत्तानपादतनयस्य ध्रुवस्य परमं रसमयम् उल्लासं तथा विरिञ्चेः ब्रह्मणः ध्यानध्वंसं समाधिभङ्गं कुर्व्वन् जयति सर्व्वोत्कर्षेण वर्त्तते । स्रग्धरावृत्तम् ।

(श) नर्त्तित्वेति । गौरो हरिः क्षणमेव अल्पकालमेव चारु

ततो हरिध्वनिरुच्चैरुच्चचार ।

राजा । अहो ! मे दुरदृष्टं यदेतदपि न दृष्टम् ।

पुरु । ततो नरसिंहनाथमण्डपञ्च संक्षाल्य धावयित्वा इन्द्रद्युम्नसरसि कृतजलविहारः सर्वैरेव तदभ्यर्णवर्त्तिनि (घ) कुसुमोद्याने विशश्राम । तदनु वाणीनाथपट्टनायकेनोपनीतानि भगवत्प्रसादादीनि सर्वैरेव सेवितानि ।

नेपथ्ये । नेत्रोत्सवः सर्वजनस्य भावी
श्वः श्रीपतेः श्रीमुखदर्शनेन ।
इतीव चित्तोत्सव एष जातो
महोत्सवस्यापि महोत्सवो यः ॥ (ङ)

राजा । महापात्र ! काशीमिश्रोऽयं यथाऽऽलपति तथा मन्ये भवन्तमेव श्रावयति तदधुना नेत्रोत्सवस्य कृताकृतावेक्षण (च) माचरतु भवान् ।

---

मधुरम् अतिमनोहरं नर्त्तित्वा गोपालदासाभिधं गोपालदासनामकम् अद्वैतस्य तनूजं पुत्रम् वक्रमधुरम् अतिमधुरं नर्त्तयाञ्चक्रे । सः गोपालदासः सुखवशात् देहान्तरं यान्निव गच्छन्निव प्राप्नुवन्निव मूर्च्छितः । ततोऽद्वैते खिद्यति विषीदति सति, स देवः पाणिपल्लवलनात् करकमलस्पर्शनात् तं प्राणयत् जीवयामासेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(घ) धावयित्वा प्रक्षाल्य । सर्वैरेव पार्षदैः सहेति शेषः । तदभ्यर्णवर्त्तिनि तत्समीपवर्त्तिनि ।

(ङ) नेत्रोत्सव इति । श्वः परदिने श्रीपतेः जगन्नाथस्य श्रीमुखदर्शनेन सर्वजनस्य नेत्रोत्सवः नेत्रानन्दः भावी इतीव यः चित्तोत्सवः मनसः उल्लासः जातः, एष महोत्सवस्यापि महोत्सवो जात इति शेषः । उपजातिवृत्तम् ।

(च) कृताकृतावेक्षणं कर्त्तव्याकर्त्तव्यदर्शनम् ।

तुलसी। यथाऽऽज्ञापयसि। इति निष्क्रान्तः।

ततः प्रविशति काशीमिश्रः।

काशीमिश्रः। अहो! अतिमधुरं भावि।

काशीश्वरक्षपितलोकचयः पुरस्ताद्
गोविन्दपालितविलासगतिः परस्तात्।
पार्श्वद्वये च सपुरीश्वरसस्वरूपो
नेत्रोत्सवाय स भविष्यति गौरचन्द्रः॥ (च)

राजा। अहो! मनसा सह सङ्कथयन् (क) मामपि नावलोकते मिश्रः।

मिश्रः। दक्षिणेऽक्षि निक्षिप्य। अहो! निष्पन्नमण्डनैव (ख) रथत्रयी विशेषतोऽयं श्रीजगन्नाथस्य रथः।

उत्सर्पिदर्पणसहस्रविभावितश्रीः
सच्चारुचामरसुचीनचयैः परीतः।
तेजोमयः समयमेत्य विराजमान
आनन्दयन्नयनमेव रथो विभाति॥ (ग)

---

(च) काशीति। पुरस्तात् अग्रतः काशीश्वरेण क्षपितः अपसारितः लोकचयः लोकसमूहः यस्य तथोक्तः परस्तात् ततःपर गोविन्देन पालिता विलासगतिः लीलागतिः यस्य तथाभूतः गोविन्दस्य यत्नेन सविलासं गच्छन्नित्यर्थः पार्श्वद्वये च उभयोः पार्श्वयोश्च स पुरीश्वर स स्वरूपः पुरीश्वरस्वरूपाभ्यां सह वर्त्तमान इत्यर्थः स गौरचन्द्रः नेत्रोत्सवाय भविष्यति नेत्रानन्दं विधास्यतीत्यर्थः। वसन्ततिलकं वृत्तम्।

(क) सङ्कथयन् आलपन्।

(ख) निष्पन्नमण्डना सुसज्जितेत्यर्थः।

(ग) उत्सर्पीति। एष रथः उत्सर्पिभिः ऊर्द्ध्वस्थितैः दर्पणानां

KANDIKA 9.

ः। अथ देशकालकृ
ी दर्शः प्रवर्तते।
ाद्या द्वादश स्मृताः
सा चैत्रादिका स्मृ
नस्येति निर्णयः॥
तदन्ते चान्द्रमासे
भवतु मा वा।
धिनोपाकर्म कृत्वा
त्रिभागे नाधीयीत
द्रात्रावण्यूर्ध्वं न दो
ासी तैषी श्रावण
ृह्य एवोक्तः। रोहि
रमेत्। अनयोः प
र्धाधिकांश्चतुरो मा
ष्टपद्यामुपाकरणम्।
कृते श्रावण्याः प्रा
ाद्यङ्गाध्ययनम्। पु
प्रपञ्चितमेतद्गृह्ये॥
नियमेन गम्यत ए
य निगमेप्यधीयीत
र्वागिति गम्यते। श
ध्यवसितं स्वीकृतं
तायतेयं स प्रदेश
मलाप

सम्यगवलोक्य । अये ! कथमिहैव राजा । उपसृत्य । जयति जयति महाराजः । महाराज ! इह स्थितेनैव त्वया रथारोहणं भगवतोऽवलोकनीयं पश्चात् स्नानोत्तरं स्वसेवा विधेया । (घ)

राजा । रथविजयसेवा मे नियताऽपि (ङ) तथा मां नोत्कण्ठयति यथा महाप्रभोर्त्वद्दर्शनस्पृहा ।

काशी । रथारोहणे जाते सति यामार्द्धान्तरित एव महाप्रभोस्त्यारम्भो भावी ।

राजा । सवितर्कम् ।

इतश्चेत् पश्येयं भवति परितोषो न मनस-
स्ततो वा पश्येयं तदपि सुलभं नैव भवति ।
प्रवेशस्तद्गोष्ठ्यां मम न घटते तद्‌धृततया
तदन्तर्वर्त्तित्वात् कथमु कलये तस्य नटनम् ॥ (च)

---

सहस्रैः विभासिता विस्फुरिता श्रीः शोभा यस्य तथाभूतः, साङ्गैः उत्कटैः वाश्मिर्मनोज्ञैः चामरैः इह वीनचयैः वर्त्तनसमूहैश्च परितः परिष्टतः तेजोभिः प्रज्वलितप्रभ इत्यर्थः समयम् एत्य प्राप्य विराजमानः शोभमानः अतएव नयनयुः आनन्दयन्नेव विभाति विराजते । वसन्ततिलकं वृत्तम् ।

(घ) स्वसेवा निजकर्त्तव्या सेवा पूजा ।

(ङ) नियतापि अनिवार्य्यत्वेन स्थितापि ।

(च) इत इति । इतः अस्मात् प्रदेशात् चेत् यदि पश्येयं तदा मनसः परितोषो न भवति, ततः तस्मिन् प्रदेशे स्थित्वेति शेषः, तदपि तत्र स्थितस्य दर्शनमपि नैव सुलभं भवति । तद्‌धृततया तेन श्रीचैतन्येन धृतः आदिष्ट इत्यर्थः तत्तया तदादेशेनेत्यर्थः तद्‌गोष्ठ्यां तस्य श्रीचैतन्यस्य गोष्ठ्यां वर्गमध्ये मम प्रवेशः न घटते न सम्भवतीत्यर्थः

तथाऽपि यावन्नटनं तावदेव तत्रैव स्थेयं तत्र देव्येव शरणम्।

काशी। महाराज! कञ्चुकिद्वारा महिषीभिरभ्यर्थितमस्ति (छ) भगवतो गौरचन्द्रस्य नृत्यदर्शनार्थमिहावस्थानम्।

राजा। सुखेन पश्यन्तु कृतार्थयन्तु लोचने जनुश्च। (ज)

काशी। तत्त्वरस्व भगवतो रथारोहणकालः सन्निकृष्ट एव।

राजा। एवमेव।

काशी। अहमपि भगवन्निकट एव गच्छामि। इत्युभौ निष्क्रान्तौ।

ततः प्रविशन्ति कञ्चुकिनोपगम्यमानास्तामेव वडभीमारूढ़ा महिष्यः।

कञ्चु। देव्यः पश्यन्तु।

सम्प्राप्तो [illegible] तनुभृतां नेत्रैर्मनोभिः समं
[illegible]लाचलचन्द्रमा रथपथं सम्प्राप गौरो हरिः।
भावाक्रान्ततयैव नित्यमनसो तेषां वरं मुच्यते:
पूर्वं नैव परन्तु पूर्वपरयोः सत्यं बलीयान् परः॥ (झ)

---

अतः तदन्तर्वर्त्तित्वात् तस्य नटनं नृत्यं कथम् कथं वा क[illegible] पश्यामीत्यर्थः? चित्रमित्योत्सुक्यम्।

(छ) कञ्चुकिद्वारा अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणेन कञ्चुकिना। अभ्यर्थितं प्रार्थितम्।

(ज) जनुश्च जन्मच।

(झ) सम्प्राप्त इति। श्रीनीलाचलचन्द्रमाः श्रीजगन्नाथः तनु-

जय पा-
त्वर
स्वा

...भिरसौ स्वजनाना-
...जयति काञ्चनगौरः ।
...कोष इव वारिरुहस्य
...लसत्तरसहस्रदलस्य ॥ ( ञ )

...सोत्कण्ठं निरीक्ष्य प्रणमन्ति ।

...। देव्यः पश्यन्तु पश्यन्तु ।

काशीश्वरोऽजनि वहिर्वलयस्य मुख्यो
गोविन्द उत्तमतमोऽजनि मध्यमस्य ।
अभ्यन्तरस्य मणिवज्जयति स्वरूपः
सामाजिकः किल पुरीश्वर ईश्वराग्रे ॥ ( ट )

---

...वतां देहिनां नेत्रैः मनोभिः सह रथस्य कम्बरं पीतादेर्ष समाप्तः । गौरो हरिश्च तथैव रथपथं समाप । तेषां तनुभृतां नेत्रमनसी भागकान्ततया वरं पूर्वं श्रीजगन्नाथं मुहुतः त्यजतः, परन्तु गौरं हरिन्तु नैव मुञ्चत इति शेषः अतः पूर्वपरयोः जगन्नाथगौरचन्द्रयोः परः गौरचन्द्रः सत्यं, बलीयान् श्रेष्ठः पूर्वस्य दारुमयत्वात् उत्तरस्य पूर्णत्वादिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(ञ) मण्डलैरिति । असौ काञ्चनगौरः श्रीचैतन्यः स्वजनानां त्रिभिः मण्डलैः दलैः आवृतः परिवृतः प्रोल्लसत्तरं प्रकर्षेण विकस्वरं तरं सहस्रदलं यस्य तादृशस्य वारिरुहस्य पद्मस्य बीजकोषः बीजाधार इव जयति सर्वोत्कर्षेण वर्त्तते । स्वागतावृत्तम् ।

(ट) काशीश्वर इति । काशीश्वरः वहिर्वलयस्य वहिर्मण्डलस्य मुख्यः श्रेष्ठः अजनि, गोविन्दः मध्यमस्य वलयस्य उत्तमतमः श्रेष्ठतमः अजनि । स्वरूपः अभ्यन्तरस्य वलयस्य अन्तर्मण्डलस्य मणिवत् रत्नमिव जयति । पुरीश्वरः ईश्वरस्य देवस्य अग्रे सामाजिकः समाजाधिपतिः किल इष्यते इति शेषः । वसन्ततिलकं वृत्तम् ।

स्वयं निभाल्य। अहो! महत् कौतुकम्।

सङ्कोचाद्विरलीकरोति न जनांश्चैतन्यपादाश्रयां-
स्तैस्तैर्गाढनिरन्तरावृततया गौरस्य नो पश्यति।
सोत्कण्ठं नयनद्वयीं तत इतो व्यापारयन्नन्तरं
सम्प्रेप्सुर्हरिचन्दनांसविलसद्बाहुर्नृपो भ्राम्यति ॥ (ठ)

देव्यः। अस्स जादिसी उक्कण्ठा तादिसं ज्जेव ववहरदि(१)

कञ्चु। अहो! प्रमादः।

राजाक्षिवर्त्मभिदुरं हरिचन्दनोऽसौ
श्रीवासमन्तरयति स्वकरेण मन्दम्।
रुष्टो जघान तमसौ प्रतिरुष्टमेनं
राजैव सान्त्वयति सानुनयं नयेन ॥ (ड)

(१) अस्य यादृशी उत्कण्ठा तादृशमेव व्यवहरति।

(ठ) सङ्कोचादिति। हरिचन्दनस्य अंसे स्कन्धदेशे विलसन् राजन् बाहुर्यस्य तथोक्तः नृपः सङ्कोचात् कुण्ठीभावात् चैतन्यपादाश्रयान् जनान् चैतन्यपार्षदानित्यर्थः न विरलीकरोति नापसारयति, तैस्तैः चैतन्यपार्षदैरित्यर्थः गाढं यथा तथा निरन्तरावृततया गौरं श्रीचैतन्यस्य नो पश्यति। तत इतः सोत्कण्ठं यथा तथा नयनद्वयीं व्यापारयन् निक्षिपन् अन्तरम् अवकाशं सम्प्रेप्सुः सम्प्राप्तुमिच्छुः सन् भ्राम्यति। शार्दूलविक्रीडितं वृत्तम्।

(ड) राजेति। असौ राजस्पृष्टस्कन्धः हरिचन्दनः राज्ञः अक्षिवर्त्म भिदुरं नयनपथरोधकारं श्रीवासं स्वकरेण मन्दं यथा तथा अन्तरयति अपसारयति। असौ श्रीवासः रुष्टः सन् तं जघान प्रजहार, ततो राजैव प्रतिरुष्टम् एनं हरिचन्दनं नयेन सान्त्ववादेन सानुनयं सान्त्वयति। वसन्ततिलकं वृत्तम्।

देव्यः। तादिसाणं णिरवेक्खाणं का वराओ (ढ) हरि चन्दणे (१)।

कञ्चु। पश्यन्तु पश्यन्तु।

उद्दामताण्डवविधौ जगदीश्वरस्य
सर्वे परस्परकरग्रहणं विधाय।
बाहू प्रसार्य्य परितः प्रतिषन्ति शश्वत्
भूमौ स्खलत्तरतनोः क्षतशङ्कयैव॥ (ण)

देव्यः। दाणिं सुहेण दीसइ (२)।

कञ्चु। पश्यन्तु।

क्षणमुत्प्लवते मृगेन्द्रकल्पं
क्षणमाधावति मत्तनागतुल्यम्।
भ्रमति क्षणमप्यलातचक्र-
प्रभमानन्दतरङ्गतो यतीन्द्रः॥ (त)

---

(१) तादृशानां निरपेक्षाणां को वराको हरिचन्दनः।

(२) इदानीं सुखेन दृश्यते।

---

(ढ) निरपेक्षाणां कमपि अनपेक्षमाणानामित्यर्थः, वराकः दीनः।

(ण) उद्दामेति। उद्दामताण्डवविधौ उत्कटनृत्यविधाने सर्वे पार्षदाः परस्परकरग्रहणं विधाय बाहू प्रसार्य्य शश्वत् सततं भूमौ स्खलत्तरा अतिशयेन स्खलन्ती तनुर्यस्य तादृशस्य जगदीश्वरस्य श्रीचैतन्यस्य क्षतशङ्कया आघातसंशयेन एव परितः समन्तात् प्रतिषन्ति परिवेष्टन्ते। वसन्ततिलकं वृत्तम्।

(त) क्षणमिति। यतीन्द्रः आनन्दतरङ्गतः आनन्दावेगात् क्षणं मृगेन्द्रकल्पं सिंहसदृशम् उत्प्लवते उल्लम्फनं करोति, क्षणं मत्तनागतुल्य

अपि च, अन्तर्भावविदामुदारमनसामाद्यः स्वरूपो यदा
यद्गातुं दिशतीदमेव सकलः प्रीत्यैव तद्गायति।
तस्यार्थस्तनुमानिव प्रतिफलन् गौरो नरीनृत्यते
स्तम्भाश्रुस्वरभङ्गकम्पपुलकप्रस्वेदमूर्च्छाश्रितैः॥ (थ)

देव्यः। अच्चरिअं क्खु एदं पेम्मानन्दचमक्कारस्स (१)।

कञ्चु। पश्यन्तु।

आनन्दाम्बुनिधेर्न वेद्मि कतमैरुच्चावचैरूर्मिभि-
र्नृत्योन्मादमदेन गौरभगवत्यानन्दमूर्च्छां गते।
निश्चेष्टः कठिनोऽश्मसन्नवदभूच्छ्वासो न संलक्ष्यते
कान्तिः केवलमुज्ज्वलैव सुहृदामाश्वासवीजायते॥ (द)

---

(१) आश्चर्यं खलु इदं प्रेमानन्दचमत्कारस्य।

---

चक्रहस्तिहृदयम् आधावति विद्रवति। क्षणमपि व्यतीतचक्रभ्रमं ज्वलदुल्मुककदम्बं भ्रमति।

(थ) अन्तर्भावेति। अन्तर्भावविदाम् आन्तरिकभक्तिरसज्ञानाम् उदारमनसां महाशयानाम् आद्यः मुख्यः स्वरूपः यदा यत् गातुं दिशति उपदिशति, सकल एव जनः प्रीत्यैव प्रणयेनैव तदिदं गायति। तनुमान् मूर्तिमान् प्रतिफलन् स्फुरन् तस्य गीतस्य अर्थ इव गौरः स्तम्भाश्रुस्वरभङ्गकम्पपुलकप्रस्वेदमूर्च्छाश्रितैः सात्त्विकैरुपलक्षितः सन् नरीनृत्यते पुनः पुनरतिशयेन नृत्यति। शार्दूलविक्रीडितं वृत्तम्।

(द) आनन्दाम्बुनिधेरिति। आनन्द एव अम्बुनिधिः समुद्रः तस्य कतमैः कतिभिः उच्चावचैः नैकविधैः ऊर्मिभिः तरङ्गैः न वेद्मि न जानामि, नृत्योन्मादमदेन गौरभगवति देवे गौरचन्द्रे आनन्दमूर्च्छां गते सति निश्चेष्टः कठिनः अश्मवत्, अस्य वाष्पवारि वसवत्, श्वासः

KANDIKĀ 9.

ाः। अथ देशकालक्र
ो दर्शः प्रवर्तते।
ाद्या द्वादश स्मृता
सा चैत्रादिका स्मृ
त्रस्येति निर्णयः॥
तदन्ते चान्द्रमासे
ु भवतु मा वा।
धिनोपाकर्म कृत्वा
त्रिभागे नाधीयीत
त्रात्रावप्यूर्ध्वं न दो
ासी तैषी श्रावण
गृह्य एवोक्तः। रोहि
रमेत्। अनयोः
र्धाधिकांश्चतुरो मा
ष्टपद्यामुपाकरणम्।
कृते श्रावण्याः प्रा
ाद्यङ्गाध्ययनम्। पु
प्रपञ्चितमेतद्गृह्ये॥
नियमेन गम्यत ए
य निगमेष्वधीयीत
र्वागिति गम्यते। ऋ
ध्यवसितं स्वीकृतं
ायतेयं स प्रदेश

ामन्त्रा U. ¹)

देव्यः। ईसरोत्ति सम्बित्तीज्जेव (ध) णो जीअणं धारेदि। अणधा एदं किं दंसिदुं सक्कीअदि (१)।

कञ्चु। पुनर्निभाल्य। अहो! जीवितमहो! जीवितम्।

रोमाञ्चाः पुनरुन्मिषन्ति नयने भूयोऽपि पर्य्यश्रुणी
निष्ठेवस्य पुनः प्ररोहति पुनः श्वासोऽधरं धावति।
सर्वेषामभितोऽभितः समुदयत्याह्लादकोलाहलो
देवो जागरयाञ्चकार हृदयं स्वानन्दमूर्च्छां त्यजन्॥ (न)

देव्यः। अम्महे जीविदम्ह जीविदम्ह (२)

कञ्चु। पुनर्निभाल्य। अहो! अद्भुतम्।

येनैव गीतेन बभूव मूर्च्छा
तेनैव भूयोऽजनि सम्प्रबोधः।

---

(१) ईश्वर इति संवित्तिरेव नो जीवनं धारयति। अन्यथा एतद् किं द्रष्टुं शक्यते।

(२) अहो जीविता स्मो जीविताः स्मः।

---

न संलक्ष्यते। केवलम् उज्ज्वला कान्तिरेव सुहृदां बन्धूनाम् आश्वासबीजायते आश्वासबीजमिव आचरति आश्वासवतीत्यर्थः।

(ध) संवित्तिः सम्यक् ज्ञानम्।

(न) रोमाञ्चा इति। रोमाञ्चाः पुनः उन्मिषन्ति उद्गच्छन्ति। नयने नेत्रे भूयोऽपि पुनरपि पर्य्यश्रुणी अश्रुपूर्णे। निष्ठेवस्य जिह्वा-रसस्य पुनः प्ररोहति जायते। श्वासस्य पुनः अधरं धावति। अभितः अभितः सर्वतः सर्वतः सर्वेषां जनानाम् आह्लादकोलाहलः समुदयति समुद्गच्छति यतः देवः स्वानन्दमूर्च्छां स्वस्य आनन्देन मूर्च्छां त्यजन् सन् हृदयं जागरयाञ्चकार। शार्दूलविक्रीडितं वृत्तम्।

किमेक एवैष स कोऽपि मन्त्रः
प्रयोगसंहारविधौ स्वतन्त्रः ॥ (प)

अपिच, नृत्योन्मादतरङ्गिणीर्बलवतीरानन्दवात्या क्रमा-
दत्युल्लासयति स्म तत्र जनितो वीचीतरङ्गक्रमः ।
कश्चित् कञ्चिदनीनशत्तमपरस्तञ्चापरस्तं पर-
श्चेत्यानन्दतरङ्गजैव विविधा वृत्तिर्न गीतार्थजा ॥ (फ)

अहो ! स्वरूपस्य प्रेममाधुर्य्यम् । तथा हि

उत्थाय मन्दमुपविश्य सुखोर्म्मिवेग-
निघ्नस्य तर्जनिकया लिखतो धरित्रीम् ।
आशङ्कितः चलितकृते सदयं स्वरूपो
देवस्य पाणिमरुणन्निजपाणिनैव ॥ (ब)

---

(प) येनेति । येनैव गीतेन मूर्च्छा बभूव देवस्येति शेषः । तेनैव गीतेन भूयः पुनः सम्बोधः अजनि जातः । प्रयोगसंहारविधौ स्वतन्त्रः मन्त्रः एषः कोऽपि स मन्त्र एव एकः मुख्यः किम् ? उपजातिर्वृत्तम् ।

(फ) नृत्योन्मादेति । आनन्दवात्या आनन्दरूपिणी झटिका क्रमात् बलवतीः नृत्योन्मादतरङ्गिणीः नृत्योन्मादनदीः अत्युल्लासयति स्म अतिशयेन उल्लासयति स्म तत्र नदीषु जनितः उत्थापितः कश्चित् वीचितरङ्गक्रमः प्रबलतरङ्गपरिपाटी कञ्चित् तरङ्गम् अनीनशत् नाशयामास । तं नाशकं तरङ्गम् अपरस्तरङ्गः, तञ्चापरं तरङ्गम् अपरः अन्यस्तरङ्गः, तम् अन्यं तरङ्गं परश्च अनीनशदित्यनेनान्वयः । इति इत्थं विविधा वृत्तिः व्यापारः आनन्दतरङ्गजैव, न गीतार्थजा । येन आनन्दतरङ्गेणैव मूर्च्छा, तेनैव आनन्दतरङ्गेण प्रबोधो देवस्य न गीतेनेति फलितार्थः । [illegible] शार्दूलविक्रीडितं वृत्तम् ।

(ब) उत्थायेति । [illegible] स्वरूपः उत्थाय प्रबोधोदयादिति भावः

पुनर्निरूप्य । अहो ! कष्टम् ।

गच्छत्येष जगत्पती रथगतो बाहू प्रसार्य्य स्वयं
प्रीत्योत्थापयितुं रथोदरमिव श्रीगौरचन्द्रं पुरः ।
नृत्यन्नेव स चापसर्पति परं बाष्पोदयेनात्मनो
द्वावेवाक्षिपथं व्यतीयतुरहो ! भाग्यं विशश्राम नः ॥ (भ)

तद्वयमितोऽवतरामो यदयं राजाऽपीत एवागच्छति ।

इति देवीरवतार्य्य ताभिः सह निष्क्रान्तः ।

ततः प्रविशति राजा काशीमिश्रश्च ।

राजा । अहो ! निर्व्यूढो रथोत्सवः ।

गुण्डिचागृहमवस्थित एकः प्राप्तवानुपवनान्तरमन्यः ।
देवयुग्ममिदमेव जनानां चित्तमेव युगपत् प्रविवेश ॥ (म)

---

मन्दं शनैः उपविश्य सुखोर्मिवेगनिमग्नस्य आनन्दतरङ्गनिमग्नस्य तर्जनिकया तर्जन्या धरित्रीं लिखतः [illegible] देवस्य चलिकते पतनशङ्कया आशङ्कितः [illegible] [illegible] प्राप्तिन् अरुपात् रोध संवाहयामासेत्यर्थः । वसन्ततिलकं वृत्तम् ।

(भ) गच्छतीति । एष रथगतः रथस्थः जगत्पतिः जगन्नाथः स्वयं बाहू प्रसार्य्य प्रीत्या श्रीगौरचन्द्रं रथोदरं रथाभ्यन्तरम् उत्थापयितुमिव पुरः अग्रतः गच्छति । स च गौरचन्द्रः नृत्यन्नेव अपसर्पति रथपश्चात् अपसरति । द्वावेव जगन्नाथौ [illegible] भावः आत्मनः स्वस्य बाष्पोदयेन अश्रुधारावर्षणेन परम् अत्यर्थम् अक्षिपथं नेत्रपथं व्यतीयतुः अतिक्रान्तौ अहो ! आश्चर्य्यं न अस्माकं भाग्यं विशश्राम चचाल देवयोरदर्शनादिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(म) गुण्डिचेति । एकः जगन्नाथः गुण्डिचागृहम् अवस्थितः । अन्यः उपवनान्तरं प्राप्तवान् । इदमेव इत्थमेव देवयुग्मं देवद्वयं जनानां चित्तं युगपदेव समकालमेव प्रविवेश । स्वागतावृत्तम् ।

काशीमिश्र! हीरापञ्चम्यां भगवत्याः श्रियो (य) देव्याः प्रयाणयात्रा सर्वतश्चमत्कारिणी यथा भवति तथा कार्या। छत्रचामरादीनि भगवद्भाण्डारागारे यावन्ति सन्ति यावन्ति वा मम कोषागारेषु सन्ति तावन्त्येव समानेयानि यथा रथोत्सवादपि लोचनचमत्कारकारकत्वेन मूर्त्त एवाद्भुतरसो भवति।

काशी। यथाऽऽज्ञापयसि।

राजा। त्वमद्यारभ्य तथा कुरु अहमपि पुरं प्रविशामि। इति निष्क्रान्तः।

काशी। स्वगतम्। आरामान्तरमागतेषु भगवत्पार्षदेषु अद्वैतादिषु च समस्तेषु महत्सु किं वृत्तमिति निभालयामि। इति जगन्नाथवल्लभाख्यमुपवनं सहर्षमालोक्य। अहो! भगवतः श्रीकृष्णचैतन्यस्यैव साक्षात्।

श्वो मे परश्वो मम तत्परेऽह्नि
ममापरेद्युर्मम चापरेऽह्नि।
ममेति भिक्षादिननिर्णयेना-
द्वैतादयः कौतुकिनो बभूवुः॥ (र)

तदधुनात्र मम प्रवेशोऽयोग्यस्तदहमासन्नस्य हीरा-

(य) श्रियः लक्ष्म्याः।

(र) श्व इति। अद्वैतादयः मे मम श्वः आगामिदिने भिक्षा, मम परश्वः, तत्परदिने, मम तत्परे अह्नि, मम अपरेद्युः अपरस्मिन् दिने, मम च अपरे अन्यस्मिन् अह्नि भगवते भिक्षा देया इति भिक्षादिननिर्णयेन कौतुकिनः कौतुकवन्तः बभूवुः। उपजातिवृत्तम्।

नभो वापीहंसैरिव मृदुचलैश्चामरचयैः
सितच्छत्रैः फुल्लद्धवलकमलौघैरिव वृता ॥ (क)

अपि च, सुधूपानां धूमैः प्रतिदिशमुदीर्णैरुपचिते
घनौघे गम्भीरं ध्वनति मुरजादिव्यतिकरे ।
बलाकानां श्रेणीमिव धवलमुक्तारुणततौ
चलन्त्यामुन्मत्ता इव दधति लास्यानि शिखिनः ॥ (ख)

अन्यतः । पुरो वारस्त्रीभिर्गुणविजितरम्भाप्रभृतिभि-
र्लसल्लीलालास्यं मुहुरभिनयन्तीभिरभितः ।
समन्ताद्दासीभिर्व्यजनचयताम्बूलपुटिका-
मणीभृङ्गारादिग्रहणचटुलाभिः परिवृता ॥ (ग)

---

द्वाभ्यामिव द्विसहस्ररसनाभ्यामिवेत्यर्थः द्विजिह्वत्वादिति भावः युगपत् दश दिशः वीड़ाः आच्छादिताः मङ्गरः पताका उत्क्षिप्ता इत्यर्थः । तथा हंसैरिव सरोवरहंसैरिव मृदुचलैः मन्दमन्दमञ्चलितैः चामरचयैः चामरवृन्दैः तथा फुल्लद्भिः विकसद्भिः धवलैः श्वेतैः कमलौघैरिव सितच्छत्रैः श्वेतातपत्रैः नभोवापी अन्तरीक्षसरसी वृता आच्छादिता । शिखरिणीवृत्तम् ।

(ख) सुधूपानामिति । प्रतिदिशमुदीर्णैः उत्पतितैः सुधूपानां सुष्ठु धूपानां धूमैः उपचिते पुष्टिं नीते घनौघे मेघनिचये इवोज्ज्वल-योव्यम् । मुरजादिव्यतिकरे मृदङ्गादिवाद्यमिश्रणे गम्भीरं ध्वनति सति, तथा बलाकानां बकानां श्रेणीमिव धवलानां सताम् उत्-कृष्टानां मौक्तिकानां वंशिकाततौ समूहे चलन्त्यां राजन्त्यां सत्यां शिखिनः मयूराः उन्मत्ता इव लास्यानि दधति कुर्वते । शिखरिणी-वृत्तम् ।

(ग) पुर इति । विमानस्थेति । पुरः अग्रतः गुणैः सौन्दर्या-दिभिः विजिता रम्भाप्रभृतयः अप्सरसः याभिः तादृशीभिः अभितः

अपि च, विमानस्य ग्लानीमिव विदधतीं मुग्धमहसा
चतुर्दोलीं चामीकरमणिमयीमुत्थितवती ।
अतिक्रोधान्धाऽपि स्मरभरसमाभुग्नहृदया
पयोधेः पुत्रीयं पितृजनितदर्पेव वलते ॥ (ग)

रूप । सोपहासम् । अहो ! मानवैदग्ध्यमस्याः । (घ)

श्रीचैतन्यः । स्वरूप ! कीदृशं प्रणयकोपवैदग्ध्यम् ।

स्वरू । या यादृशी तस्याः खलु तथाविधं वैदग्ध्यम् ।

श्रीचै । तथाऽपि शृणुमः ।

स्वरू । कदाचित् कृतापराधे प्रणयिनि श्रीव्रजराज-
किशोरे सविधमागत्य समुचितं व्याहरति (ङ) सति ।

---

समन्तात् मुहुः पुनः पुनः लसत् शोभमानं लीलया विलासेन लास्य-
लास्यं यथा तथा अभिनयन्तीभिः गच्छन्तीभिरित्यर्थः व्यजन-
चयस्य चामरवृन्दस्य ताम्बूलपुटिकायाः ताम्बूलवीटिकायाः मणी-
भृङ्गारादेश्च सहस्रं चटुलाभिर्व्यग्राभिः दासीभिः समन्तात् परिवृता ।
मुग्धमहसा मनोज्ञकान्त्या विमानस्य देवयानस्य ग्लानीमिव मालिन्य-
मिव विदधतीम् आवहन्तीं चामीकरमणिमयीं सुवर्णमणिनिर्मितां
चतुर्दोलीं तदाख्यं यानमुत्थितवती आरूढा अतिक्रोधान्धापि स्मरभरेण
मदनातिरेकेण आभुग्नम् आनतं सरसमित्यर्थः हृदयं यस्याः तथाभूता
इयं पयोधेः समुद्रस्य पुत्री लक्ष्मीः पित्रा पयोधिना जनितः उत्-
पादितः दर्पः अहङ्कारः यस्याः तथाभूतेव वलते अभिगच्छति । उभ-
यत्र शिखरिणी वृत्तम् ।

(घ) मानवैदग्ध्यं मानचातुर्यम् ।

(ङ) सविधं समीपम् । व्याहरति आलपति ।

किं पादान्तमुपैषि नास्मि कुपिता नैवापराद्धो भवा-
न्निर्हेतुर्न हि जायते कृतधियां कोपोऽपराधोऽथवा ।
योग्या एव हि भोग्यतां दधति ते तत्किं मयाऽयोग्यया
तेनाद्यावधि गोकुलेन्द्रतनय ! स्वाच्छन्द्यमेवास्तु ते ॥ (च)

इदं कोपवैदग्ध्यम् । प्रकारान्तरञ्च ।

दूरादुत्थितमन्तिकं मयि गते पीठं करेणार्पितं
स्मित्वा भाषिणि भाषितं मृदुसुधानिःस्यन्दि मन्दं वचः ।
आरूढेऽर्द्धनयासनं प्रकटितो हर्षस्तयाऽऽश्लिष्यति
प्रत्याश्लिष्टमवामयैव मनसो वाम्यं तयाऽऽविष्कृतम् ॥ इति (छ)

श्लोकै । पूर्वतोऽपि सुरसमिदम् ।

---

(च) किमिति । देव्या उक्तिरियम् । हे गोकुलेन्द्रतनय ! किं कथं पादान्तम् उपैषि चरणे निपतसि ? अपि अहं न कुपिता भवान् नैव अपराद्धः कृतापराधः । कृतधियां सुबुद्धीनामित्यर्थः निर्हेतुः अकारणः कोपः अथवा अपराधः नहि जायते । योग्या एव भोग्यतां दधति हि भोग्या भवन्तीत्यर्थः । तस्मात् अयोग्यया मया ते तव किं प्रयोजनमिति शेषः । तेन हेतुना अद्यावधि ते तव स्वाच्छन्द्यमेव स्वाधीनतैव स्वैरकारारित्वमेवेत्यर्थः अस्तु । शार्दूल-विक्रीडितं वृत्तम् ।

(छ) दूरादिति । मयि अन्तिकं गते सति दूरात् उत्थितं करेण पीठं आसनमित्यर्थः अर्पितं दत्तम् । स्मित्वा भाषिणि मयीति शेषः । मृदु अतः सुधानिस्यन्दि अमृतवर्षि मन्दं वचः भाषितम् उक्तम् । अथ अर्द्धम् आसनं आरूढे मयीति शेषः हर्षः प्रकटितः आविष्कृतः दर्शितमित्यर्थः । आश्लिष्यति आलिङ्गति मयीति शेषः प्रत्याश्लिष्टं प्रत्यालिङ्गितं सर्वत्र तयेति कर्त्तृपदमन्वेतव्यम् । इत्थं तदा मनसः अवामयैव अप्रातिकूल्येनैव वाम्यं प्रातिकूल्यं मान इति भावः

श्रीवासः । सपरिहासम् । गोपाललनानां कीदृशम्-ऐश्वर्य्यम् । ऐश्वर्य्यं हि मदहेतुः । (ज)

अस्याः पश्यत भो मदस्य महिमा दासीकुलेनेश्वरी-
गर्वोत्सेकमदोद्धुरेण यदमी बद्ध्वा कटीरोधसि ।
मुख्या एव जगत्पतेः परिजनाः प्रत्येकमाकर्षिता
पात्यन्ते स्म निजेश्वरीपदपुरः प्रापय्य चौरा इव ॥ (झ)

भृत्यापराधे स्वामिनो दण्ड इत्येव श्रुतम् । इदन्तु तद्विपरीतमेवेत्यहो (ञ) अत्यद्भुतम् ।

स्वरू । श्रीवासं प्रति । भोः पण्डित ! पश्य पश्य तव देव्या वैदग्ध्यम् ।

अचेतनस्यास्य रथस्य को वा
मन्तुः कथं ताड्यत एष भृत्यैः ।

---

आविष्कृतं प्रकटितम् । शार्दूलविक्रीडितं वृत्तम् वस्तु प्रति वस्तु-निन्दायकस्योक्तिरियम् ।

(ज) मदहेतुः गर्वकारणम् ।

(झ) अस्या इति । भोः अस्याः श्रियाः मदस्य महिमा साक्षादत्र पश्यत अवलोकयत, यत् ऐश्वर्य्यां यः गर्वः तस्य उत्सेकेन उद्रेकेण यः मदः अहङ्कारः तेन उद्धुरेण उद्धतेन दासीकुलेन दासी-वर्गेण प्रत्येकं कटीरोधसि कटितटे बद्ध्वा आकर्षिता सुताः अमी मुख्याः प्रधाना एव जगत्पतेः जगन्नाथस्य परिजनाः निजेश्वर्य्याः देव्याः पदपुरः पदाग्रे प्रापय्य आनीय चौरा इव पात्यन्ते स्म । शार्दूल-विक्रीडितं वृत्तम् ।

(ञ) इदन्तु तद्विपरीतमिति स्वामिनः अपराधे भृत्यदण्ड इति भावः ।

याखाम्यदूरेऽहमितीश्वरेण
प्रोक्ते कथं वाऽजनि दीर्घकोपः ॥ (ट)

श्रीवा। स्वामिन्! ऐश्वर्य्या हि इयमेव रीतिः।

श्रीचै। श्रीवास! नारदत्वेन (ठ) भवान् द्वारकाविलास-प्रिय एव तेन तुभ्यमैश्वर्य्यांश एव रोचते। स्वरूपस्य वृन्दा-वनप्रियत्वात् तथाविधानन्दवैदग्ध्यांश एव प्रेयान्।

अद्वैतः। भगवन्!

भगवत्पदाम्भोरुहयोरनुग्रहा-
दस्माद्दृशामीदृशमीदृशं महत्।
बभूव सौभाग्यमहो महोत्सवा
मूर्त्ता इवामी विविशुर्दृशोः पथि ॥ (ड)

श्रीचै। किन्ते भूयः प्रियमुपकरोमि।

अद्वै। किं भूयः प्रियमुपकरिष्यसि।

---

(ट) अचेतनस्येति। अचेतनस्य अस्य रथस्य को वा मन्तुः अपराधः आगोऽपराधौ मन्तुश्चेत्यमरः। कथमेष रथः भृत्यैः देव्या इति शेषः ताड्यते आहन्यते। अहम् अदूरे निकटे यास्यामि शीघ्रमागमिष्यामीति भावः। इति ईश्वरेण प्रोक्ते वा कथं दीर्घकोपः अजनि जातः?। उपजाति वृत्तम्।

(ठ) नारदत्वेन नारदांशावतारत्वेनेत्यर्थः।

(ड) भवदिति। भवतः पदाम्भोरुहयोः पदपङ्कजयोः अनुग्रहात् अस्माकं ईदृशमीदृशं महत् सौभाग्यं बभूव अहो! आश्चर्य्यं यत् अमी मूर्त्ता इव महोत्सवाः दृशोः पथि विविशुः दृष्टिगोचरा बभूवुरित्यर्थः। वंशस्थविलं वृत्तम्।

हेलाखेलायितेनातनि कलिमथनं ख्यापितो भक्तियोगो
व्यक्तं तत्रापि नीतः परमसुनिभृतः प्रेमनामा पदार्थः ।
क्वापि क्वापि प्रकीर्णा पुरुतरसुभगम्भावुका भावुकानां
तत्राप्याभीरनारीमुकुटमणिमहाभावविद्याऽनवद्या ॥ (ढ)

अस्माकन्तु । धर्मार्थकामेषु परैव कुत्सा
लिप्सा न मोक्षस्य च कर्हिचिन्नः ।
एभिः समस्तैस्तव देव ! लोकै-
र्लोकान्तरेऽप्यस्तु सहैव वासः ॥ (ण)

श्रीचै । एवमेव ।

वृन्दारण्यान्तरस्थः सरसविलसिते नात्मनात्मानमुच्चै-
रानन्दस्पन्दवन्दीकृतमनसमुरीकृत्य नित्यप्रमोदः ।

---

( ढ ) हेलेति । हेलाखेलायितेन हेलया अवज्ञया यत् खेला-यितं क्रीड़ितं तेन कलिमथनं कलेर्दमनम् अतनि कृतमित्यर्थः भक्ति-योगः ख्यापितः प्रकटीकृतः । तत्रापि भक्तियोगे व्यक्तं स्फुटं यथा तथा परमः महान् सुनिभृतः अतिनिगूढ़ः प्रेमनामा पदार्थः वस्तु नीतः संयोजितः । तत्रापि क्वापि क्वापि प्रेमपोत्कर्षः भावुकानां प्रेमिकाणां पुरुतरसुभगम्भावुका अत्यन्तप्रियतरा अनवद्या अनिन्द्या आभीरनारीणां गोपनारीणां मुकुटमणौ श्रीकृष्णे यः महाभावः महती प्रीतिः तस्य विद्या प्रकीर्णा प्रकाशितेत्यर्थः । स्रग्धरावृत्तम् ।

( ण ) धर्मार्थकामेष्विति । हे देव ! नः अस्माकं धर्मार्थ-कामेषु परा महती एव कुत्सा अरतिरित्यर्थः अस्तु कर्हिचित् कदा-चिदपि मोक्षस्य लिप्सा लाभेच्छा न अस्तु । एभिः समस्तैः लोकैः सहैव लोकान्तरेऽपि वासः अस्तु । इन्द्रवज्रावृत्तम् ।

( त ) वृन्दारण्यान्तरस्थ इति । अहं वृन्दारण्यान्तरस्थः सरस-विलसितेन सरसेन विलासेन आत्मना स्वयम् आत्मानम् उच्चैः आनन्द-

यस्योच्छिष्टप्रसादादयमजनि मम प्रौढ़िमा काव्यरूपी
वाग्देव्या यः कृतार्थीकृत इह समयोत्कीर्त्त्य तस्यावतारम्
यत् कर्त्तव्यं मयैतत्कृतमिह सुधियो येऽनुरज्यन्ति तेऽस्मी
शृण्वन्त्वन्यान् नमामश्चरितमिदममी कल्पितं नो विदन्तु ॥
श्रीचैतन्यकथा यथामति यथादृष्टं यथाकर्णितं
जग्धे कियती तदीयकृपया बालेन येयं मया ।
एतां तत् प्रियमण्डले शिव शिव स्मृत्येकशेषं गते
को जानातु शृणोतु कस्तदनया कृष्णः स्वयं प्रीयताम् ॥
दृष्टा भागवताः कृपाप्युपगता तेषां स्थितं तेषु च
ज्ञातं वस्तु विनिश्चितञ्च कियता प्रेम्णाऽपि तच्चासितम् ।
जीवद्भिर्न मृतं मृतैर्यदि पुनर्मर्त्तव्यमस्मिन्विधे-
स्तत्रैव न किं मृतं बत विधे वामाय तुभ्यं नमः ॥
शाके चतुर्दशशते रविवाजियुक्ते
गौरो हरिर्धरणिमण्डल आविरासीत् ।
तस्मिंश्चतुर्नवतिभाजि तदीयलीला-
ग्रन्थोऽयमाविरभवत् कतमस्य वक्त्रात् ।

समाप्तमिदं चैतन्यचन्द्रोदयनाम नाटकम् ॥

———

